# Document Information

Text title : advaitarasamanjari
File name : advaitarasamanjari.itx
Location : doc_z_misc_major_works
Author : shriimatparamaha.nsa parivraajaka sadaashiva brahmendra
Language : Sanskrit
Subject : philosophy/hinduism
Transliterated by : Sunder Hattangadi (sunderh at hotmail.com)
Proofread by : Sunder Hattangadi (sunderh at hotmail.com)
Latest update : Dec. 3, 2009
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ अद्वैतरसमञ्जरी ॥

श्री गणेशाय नमः ॥

श्री गुरुभ्यो नमः ॥

॥ अद्वैतरसमञ्जरी ॥

अखण्डसत्यज्ञानानन्दामृतस्यात्मस्तव-
स्तवादिकं कथं कुर्यां करणागोचरत्वतः ॥ (१)
स्वभक्तलोकानुजिघृक्षयैवया
समस्तलोकानुगता विराजते ।
अकादिरूपेण शुकादिवन्दितां
नमामि तं श्रीललितां स्वदेवताम् ॥ (२)
गजमुखमुपरिष्टान्मानवाङ्गं त्वधस्ता-
नरपरपरमैक्यज्ञापनायभ्युपेत्य ।
परिलसतिपरस्तान्मोहजालान्महोय-
त्तदिह मम पुरस्तादस्तु वस्तुपशस्तम् ॥ (३)
वटतरुनिकटे श्रीदक्षिणामूर्तिरूपं
यदधिवसति सच्चिन्मुद्रया भद्रयार्थम् ।
परमममृतमन्तेवासिनां सम्प्रदातुं
तदिहवरदमेकं भावये भावशून्यम् ॥ (४)
यतीन्द्रमण्डलं ध्यायन्नखण्डरसमण्डलम् ।
अद्वैतरसमञ्जर्याः कुर्वेद्य सुविकासिनीम् ॥ (५)
अबद्धाऽपि सुबद्धैषा सता बद्धसुदृष्टिना ।
भवेत्सन्तोषवन्तो हि सन्तस्सन्ति समेक्षणाः ॥ (६)
पादशून्यपतगायितस्य  मे खेरत्वमतिदुर्लभं खलु ।
तद्विदोऽपि तदवाप्तुमिच्छत- स्साहसं सहतु सौहृदीजनः ॥ (७)
अद्वैतमेव परमार्थतया विवेक्तु-
मङ्गीकृतद्विपनराकृतिसन्निवेशः ।
अद्वैतगोचरमशेषविदोषमन्त-
राविष्करोतु वरदो मम विघ्नराजः ॥ १॥

अज्ञानविस्फुरदनेकविधात्मभेद-
मज्ञानमाश्रिवतस्सुलभा न मुक्तिः ।
आदर्शगेहममितः प्रतिबिम्बितान्त-
र्द्वारं गतस्य न बहिर्गतिरर्भकस्य ॥ २॥

शान्त्यादिसाधनवता पुरुषोत्तमेन

सम्प्राप्यते निजपदं वरदेशिकोक्त्या ।
चोरैरण्यसरिणीं गमितेन पुंसा
देशो निजो हि तदभिज्ञगिरैव गम्यः ॥ ३॥

भूमा भवानिति गुरूपनिषद्वचोभिः
कर्त्रात्मता गलति सिध्यति भूमभावः ।
राजात्मजस्य निजतत्वनिबोधनेन
व्याधात्मताविगलनादिव राजभावः ॥ ४॥

कूटस्थनित्यसुखबोधतनोः प्रतीचो
बन्धो विमोचनमिति भ्रम दुर्विलासः ।
वन्ध्यासुतस्य वपुरादिगुणप्रपञ्च-
स्तत्पञ्चताऽपि सुतरां परिकल्पनैव ॥ ५॥

आपाततः प्रतिभया जगदस्तिवादः
सत्यं निरूपणविधौ न हि किञ्चिदस्ति ।
भीरोर्विभाति परितस्तिमिरं पिशाच-
स्तत्रैव दीपकलिकाऽऽनयते किमस्ति ॥ ६॥

चिज्ज्योतिरेव जगदात्मतया चकास्ति
वस्त्वन्तरं किमपि नास्ति विचार्यमाणे ।
रज्वौ भ्रमाधिकरणादपि रज्जुसर्प
तत्वान्तरं भवितुमर्हति किं कथञ्चित् ॥ ७॥

विश्वं समस्तमपि विभ्रममात्रमेत-
दात्मैव सन्नयनन्यसुखप्रकाशः ।
स्फूर्त्यैव विश्वमपि सत्यमितीर्यते चेत्
को नाम शुक्तिरजतेन धनीनभावि ॥ ८॥

नास्ति प्रतीत्यवसरे न पुरा न पश्चा-
दाश्चर्यमेतदवभाति तथाऽपि विश्वम् ।
यद्वा किमद्भुतविवेह महेन्द्रजालं
मायाविकल्पितमिति प्रतिभासते हि ॥ ९॥

एकोऽपि सन्नयमनेकतया विभाति
भूमा स्वकल्पिततमः पटलानुषङ्गात् ।
इन्दुर्द्वितीयरहितोऽपि च सद्वितीय-
भावेन भाति पुरुषस्य निजाक्षिदोषात् ॥ १०॥

आलोक्यते भुवनचक्रमलातचक्र-

मत्यन्तविभ्रमविजृम्भितमस्थिरं च ।
दैवात् भ्रमस्यविरतौ समुपस्थितायां
नालोक्यते किल पुरेव पुनस्तदेव ॥ ११॥

गन्धर्वपत्तनमिदं जगदव्यवस्थं
चैतन्यनामनि विहायसि नश्वकास्ति ।
विद्योतते यदि च विद्युदिवात्मविद्या
सद्यस्तिरोभवति सर्वमिदं तदैव ॥ १२॥

आरोपितस्य जगतः प्रविलापनेन
चित्तं शिवात्मकतया परिशिष्यते नः ।
शत्रून् निहत्य हतयिन्तुरधोनिप्रातात्
गन्धद्विपो भवति केवलमद्वितीयः ॥ १३॥

अद्यास्तमेतु वपुराशितारमास्तां
कस्तावतापि मम चिद्वपुषो विशेषः ।
कुम्भेऽपि नश्यति चिरं समवस्थिते वा
कुम्भांबरस्य नहि कोऽपि विशेषलेशः ॥ १४॥

सङ्कल्पमात्रसविकल्पितमूर्तिविश्वं
विश्वं च सत्यमिति मूर्च्छितमन्दबुद्धिः ।
चिन्ताप्रकर्षजनितां वनितां विदित्वा
शैवेति वल्गति यथा चिरविप्रयुक्तः ॥ १५॥

स्वस्ये मयि स्वरससत्यसुखावबोधे
व्यामोहनाज्जगदिति व्यपदिश्यते यत् ।
अन्यत्र कुत्रचिददृष्टमरूपरूप-
मस्थानचित्रमिति निश्चिनुमस्तदेतत् ॥ १६॥

आध्यासिकस्फुरणभेदतिरोहितोऽपि
चिद्धातुरेकरसतां न जहाति जातु ।
नानाचराचरविचित्रविचित्रितोऽपि
चित्रः पटो न पटभावमपास्यति स्वम् ॥ १७॥

सच्चित् सुखात्मकमखण्डितमात्मतत्त्वं
मन्येत कश्चिदहमित्यतिनिश्चितार्थम् ।
देहेन्द्रियादकमपि विभ्रमवासनाभि
व्याप्तो ममाहमितियद्वदविद्वदात्मा ॥ १८॥

विश्वं मृषा विरसमित्यवधार्य धैर्य-

मास्वाद्यते मुनिभिरन्तरसौ रसात्मा ।
सन्तापजं मरुमरीचिरसं निरस्य
संसेव्यते सुमतिभिस्सुरसिन्धुपूरः ॥ १९॥

एकान्तसन्निहितमीदृशमात्मतत्त्वं
लोका विमूढमतयो बत नाद्रियन्ते ।
आकाशगोचरमशेषजगत्प्रकाशं
घूका न भास्करमुदीक्षितुमुत्सहन्ते ॥ २०॥

आनन्दविस्फुरणरूपमपि प्रपञ्च-
मन्यं विभाव्य परितापमुपैति मुग्धः ।
दीपादिषु स्ववपुषः परिदृश्यमानां
छायां विगाह्य परिमुह्यति किं न बालः ॥ २१॥

माया स्वकीयवियदादिविकारजालै-
र्नात्मानमन्यथयितुं प्रभवत्यसङ्गम् ।
आधारपुष्करपलाशकमंबुधारा
स्वीयैः किमार्द्रयितुमर्हति शीकरौघैः ॥ २२॥

आभासमात्रतनवो जगतीविकल्पा
मां न स्पृशयन्त्यपि विमुक्तसमस्तसङ्गम् ।
आरोपिता मलिनतादिविचित्रधर्मा
लिम्पन्ति किं नु विमलं वियदन्तरालम् ॥ २३॥

स्वप्नस्सुषुप्तिरथजाग्रदिति ह्यवस्था-
स्तिस्त्रोऽपि शश्वदुदयास्तमयैरुपेताः ।
निर्मोकराजय इवोरगराजभोगे
मय्येव साक्षिणि विभान्त्यनुवर्तमाने ॥ २४॥

स्वप्नः प्रजाग्रदिति शब्दकृतो विशेषो
मायामयत्वमुभयोरपि तुल्यमेव ।
प्रत्यग्परागिति नामकृतो विकल्पः
सत्यावबोधसुखतां तु तयोस्स्वरूपम् ॥ २५॥

सर्वेन्द्रियोपरमशान्तजगद्विकल्पाः
स्वानन्दमात्रपरिशेषितचैत्यबोधे ।
ते जाग्रतोऽप्यनुभवन्ति सुषुप्त्यवस्थां
क्रीडन्ति ये सततमात्मनि सत्यबोधे ॥ २६॥

कर्तेति कायिकविचेष्टितदर्शिनो मां
गृह्णन्ति चेत् किमु यथैव तथा भवामि ।

पारिप्लवोऽयमिति पामरधीगृहीत-
श्चन्द्रस्तथा नहि चलांबुदसन्निकृष्टः ॥ २७॥

मिथ्या समुल्लसतु नाम जगद्विचित्र-
मेतावता विमलतत्वविदो न हानिः ।
स्वप्ने भयङ्करगजादिनिरीक्षणेऽपि
न स्वाप्नकत्वमनुसन्धधतोऽस्ति भीतिः ॥ २८॥

अत्यन्तमेतदसदित्यपि चाव्यवस्थं
मय्यात्मदृष्टिरनुवर्तत एव लोकम् ।
नास्त्यत्र वक्रमिति निश्चितवानपि द्रा-
गादत्त एव मुकुरं मुखदर्शनाय ॥ २९॥

उद्बोधितोऽपि कबले कबले जनन्या
निद्रालसश्शिशुरिवाविदितान्यभावः ।
आलोकयन्नपि बहिर्जगदिन्द्रजाल-
मन्तः कयापि कलया न परिच्युतोऽस्मि ॥ ३०॥

दृश्ये स्फुटीभवति नेक्ष्यत एव भूमा
भूम्नि स्फुटीभवति नेक्ष्यत एव दृश्यम् ।
द्वीपान्तरे स्फुरति भूमिरियं न दृश्या
भूमण्डले स्फुरति तच्च तथा न दृश्यम् ॥ ३१॥

बोधे शनैरुपचयं प्रतिपद्यमाने
विच्छिद्यते हृदि तदा विमलं भ्रमोऽपि ।
चन्द्रे कलाभिरनुवासरमेधमाने
मन्दीभवत्यपि यथैव महान्धकारः ॥३२॥

ब्रह्मानुभूतिरसनिर्भरिते मुनीन्द्रे
कर्मानुबन्धविधयो विमुखीभवन्ति ।
सिद्धोपदर्शितरसायनपानतृप्ते
किन्नु व्यपाकविषया विधयः क्रमन्ते ॥ ३३॥

सर्वात्मतामुपगतोऽपि मुनिस्समाधिं
पूर्वानुवृत्तमयते समयापनुत्यै ।
पर्याप्तसर्वविभवः क्षितिपोऽपि काल-
निर्यापणाय जुषते चतुरङ्गलीलाम् ॥ ३४॥

आत्मज्ञमस्तमितसर्वविधिप्रवृत्ति-
मानन्दयन्ति निगमाभिमता निषेधाः ।

व्यापारमात्रविमुखस्य महालसस्य
माशब्दकव्यवहृतानि मनोहराणि ॥ ३५॥

तत्त्वानुचिन्तनपरो मुनिसार्वभौमः
स्वच्छन्दतो व्यवहरन्नपि नानुयोज्यः ।
साम्राज्यमेत्य हि यथारुचि वर्तमानो
राजा प्रजाभिरनुयोक्तुमशक्य एव ॥ ३६॥

प्रारब्धजामधिकसम्पदमापदं वा
भुञ्जान एव पुरुषः परिशुद्धियेति ।
किं वाऽऽहितुण्डिकगृहीततनुर्भुजङ्ग-
स्तत्क्लृप्तदण्डनविधिं परिहर्तुमीष्टे ॥ ३७॥

पूर्वोत्तरार्जितशुभाशुभकर्मभिस्स्व-
सम्पद्विपश्च न भवेत् परमार्थदृष्टेः ।
जात्योषरस्य धनवर्षजलाभिषेकै-
रत्योष्मणा च नहि सस्यविवृद्धिहानी ॥ ३८॥

प्रारब्धकर्मपरिपाकवशंवदो न
क्लिश्नाति निश्चितपरावधिरात्मवेदी ।
ग्रामान्तमार्गपरिमाणविदध्वनीनो
मध्येपथं न हि विषीदति दुःखितोऽपि ॥ ३९॥

अन्तर्बहिश्च परमार्थतयानुपश्यन्
न क्लिश्यति व्यसनमुत्कटमप्युपेतः ।
धीरः किलाहमुखे विजयैकदृष्टिः
प्रत्यर्थिभिः प्रमथितोऽपि न विक्लवस्स्यात् ॥ ४०॥

प्रापञ्चिकस्तु विभवः परमाद्भुतोऽपि
धीरं न रञ्जयति दृष्टतदीयतत्वम् ।
स्त्रीवेषभूषिततनुः पुरुषो विलासै-
स्तज्ज्ञं युवानमपि मोहयितुं हि नालम् ॥ ४१॥

अन्तर्निरन्तरनिगूढनिजात्मतत्वो
न प्रागिव व्यसनितां विषयेषु धत्ते ।
भाग्यात् कुतश्चिदपि लब्धनिधिर्मनस्वी
किं पूर्ववत् कृपणतामुररीकरोति ॥ ४२॥

अध्यास्थितस्वमहिमानमलक्रिया व-
दाध्यात्मिकाश्शुभगुणास्स्वयमाविशन्ति ।

स्वाधीनिते सुहृदि राजनि तस्य भृत्या
एतेऽपि च स्वयमुपेत्य तमाश्रयन्ते ॥ ४३॥

अज्ञानमेव न कुतो जगतः प्रसङ्गो
जीवेशदेशिकविकल्पकथाऽपि दूरे ।
एकान्तनिर्मलचिदेकरसस्वरूपं
ब्रह्मैव केवलमहं परिपूर्णमस्मि ॥ ४४॥

इति श्रीमत्परमहंस परिव्राजक सदाशिव ब्रह्मेन्द्र विरचिता
अद्वैतरसमञ्जरी सम्पूर्णा ॥



.. Advaita-rasa-manjari ..
was typeset on July 25, 2016

Please send corrections to *sanskrit@cheerful.com*